गृत्समदस्येदमार्षं त्रिष्टुप्सौरी । अस्यामेव ऋचि तावदुभयमपि प्रदर्शयति—

**प्रासृजदिति वा प्रासृजत्सर्वत इति वा ॥ ३२ ॥** इति ॥

तत्राद्यस्य **प्रासृजत्**सूर्यो रश्मीनित्यर्थः । सीमिति पदपूरण एव ॥ कुतोऽपीत्य-विवक्षितमेवैतत्पक्षे । द्वितीयोदाहरणे सीमित्यस्यार्थः **सर्वत** इति ॥

परिग्रहार्थीये उदाहरणान्तरमप्याह—

**विसीमतः सुरुचो वेन आवः ॥ इतिच ॥ ३३ ॥** (य. वा. सं. १३-३)

स्वरश्मिजालान्तर्गतस्य सर्वस्य जगतो वा, धर्ता धारयिता। "ऋणोऽस्यूहसे"(पा.८-४-५७) त्वनुनासिकः । आदित्य अदितेरपत्यं पुमान् विवस्वान् । प्रासृजत्प्रकर्षेण सृष्टवान्सर्वतो र-श्मीन् इति शेषः । ( ते च सूर्यरश्मयः ) सिन्धवः स्यन्दमाना (आदित्यमण्डलात्प्राञ्चो वर्त-माना ) ऋतमुदकम् ( आदाय पृथिवीलोकादन्तरिक्षलोकाच्च ) वरुणस्य सूर्यस्य ( मण्डलं ) यन्ति गच्छन्ति। (सदैवमुत्सर्गादानलक्षणं स्वस्वकर्म कुर्वाणा अपि) न श्राम्यन्ति न (वा श्रान्ता अपि सन्तो विरागादप्येतत्कर्म ) विमुञ्चन्ति । एते (कथंपुनः पतन्तो न श्राम्यन्ति ? किं शनकैः? न ) वयो न वयः पक्षिण इव (शीघ्रं) पप्तुः पतन्तः रघुया लघुर्या (लघ्व्या) शीघ्रिकया गत्या परिज्मन् परिजमन्तः परिगच्छन्तः सर्वमप्येतज्जगत् इत्यर्थः ॥

१. सूर्यो ह्यसं वरुणनाम्ना स्तूयते सोऽप्यदितेः पुत्र इत्यादित्य एव ॥

२. प्रथमम् । ततः परिग्रहार्थीयत्वे द्वितीयमुदाहरणमनुपदं वक्ष्यति ॥

३. ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ३ ॥ ब्रह्म बृहद् रुक्मा रूपमादित्याख्यं प्रथममादौ पुरस्तात् (प्राच्यां दिशि ) जज्ञानं जायमानं दृश्यमानमिति यावत् । वनेः शानचि शपः श्लौ द्वित्वम् । "गमहने"-(पा. ६-४-९८)त्युपधालोपः । किंच वेनः कमनीयो मेधावी वा स आदित्यः सुरुचः प्रशस्तरोचनात् रश्मीन् सीमतः सर्वतः वि आवः व्यवृणोत् विवृतानकरोत् । "छन्दसि परेऽपि" "व्यवहिताश्चेति"(पा.१-४-८२) विशब्दस्य पुरस्तात् प्रयोगो व्यवहितस्य। सचार्थकाले आवरितिक्रियापदेन संबध्यते उपसर्गत्वात् । "उपसर्गाः क्रियायोगे"(पा.१-४-

1. सायणस्तु विभर्ता सेतुरिव जलस्य धारयिता आदित्यः अदितेः पुत्रो वरुण ऋतं निधारणहेतुभूतं सत्यं यद्वा नदीनामुपादानभूतमुदकं सीं सर्वतः प्रासृजत्प्रकर्षेण सृष्टवान् । तेन वरुणस्यर्तेन सिन्धवः स्यन्दनशीला नद्यो यन्ति गच्छन्ति प्रवहन्ति । एते सिन्धवः न श्राम्यन्ति न श्रमं प्राप्नुवन्ति न विमुञ्चन्ति नोपरता भवन्ति। अनश्वराः सर्वदैकरूपेण प्रवह-न्तीत्यर्थः। एतदेवोच्यते। वयो न वयः पक्षिण इव रघुयाः लघुवर्गाः शीघ्रगामिनः परिज्मन्परि-ज्मनि भूम्यां पप्तुः पतन्ति गच्छन्ति ॥ इत्येवं व्याख्यत् ॥ अत्र सुपां सुलुगिति डेर्लुक् ॥

2. ते हि वर्षाकाले मेघद्वारा स्यन्दन्ते । तएव च सूर्येण प्रसृष्टाः सार्वलौकिकमुदकमा-दाय पुनः सूर्यमण्डलं प्रविशन्ति ॥

3. लघ्वर्थे ङीषि छसि "तनिपत्योश्छन्दसि" ( पा० ६-४-९९ ) इत्युपधालोपः ॥

4. "सुपां सुलुगि"-( पा० ७-१-३९)ति डाभावे वा । सायनमते अधः स्थाने ॥

5. लघुप्रयोगलक्षणमेव प्राच्याः प्राचीत्वम् ॥

वामदेवपुत्रो नकुलोऽनया त्रिष्टुभाऽऽदित्यं तुष्टाव ॥ तदेतत्प्रदर्शयत्यर्थत —

**व्यवृणोत्सर्वत आदित्यः ॥ ३४ ॥**

**व्यवृणोदि**ति वि आवरित्यस्यार्थ । सीमत इत्यस्य **सर्वत** इति ॥

किं व्यवृणोदित्यपेक्षितमर्थतो निर्दिशति—

**सुरुच आदित्यरश्मयः ॥ ३५ ॥**

**आदित्या**ख्यस्य ब्रह्मणो **रश्मयः** किरणा । "किरणप्रग्रहौ रश्मी" इत्यमर । त एव **सुरुच**स्तानित्यर्थ. । कुतस्ते सुरुच इति सुरुच्शब्द निर्ब्रवीति—

**सुरोचनात् ॥ ३६ ॥**

तथाच सुरुच प्रशस्तरोचनाद्रश्मीनित्यर्थतो गम्यते। "रुच दीप्तौ" (भ्वा. आ) क्विप्। वेनो मेधावी ॥

अथ परिग्रहार्थीयस्य सीमिति मान्तस्य कथ सीमत इत्यकारान्तमुपादाय तसिना सीमत इति साधितमित्यनुयुक्त उत्तरमाह—

**अपिवा सीमित्येतदनर्थकमुपबन्धमाददीत**
**पञ्चमीकर्माणं सीम्नः सीमतः सीमातो मर्यादातः ॥ ३७ ॥**

अत्र **अपिवे**ति भिन्नक्रम सीम्न इत्यत प्राग्द्रष्टव्य । **सीम्** अ इत्येतदनर्थकमुपबन्धं सज्ञाकरणम् (अकारम्) **आददीता**र्थकाले । पञ्चम्या कर्म कार्यं "पञ्चम्यास्तसिल्" (पा॰ ५-३-७) इति तसिल्प्रत्ययरूपं यस्मात्पुरस्तथाभूतम् । तथाच सीमित्यय सर्वशब्दसमानार्थ एव पर्यवसन्नो भवतीति व्याख्योत सीमत सर्वत इति ॥

५९) इति पाणिनिस्मरणात् किंच उपमा उप समीपे माति भूतानि यासु ता सावकाशा अतएवास्य जगतो निष्ठा विविध तिष्ठन्ति यासु ता निविधस्थानभूता "अम्बाम्बगोभूमी" (पा॰ ८-३-९७) त्यादिना षत्वम् । एवभूता शुभ्या शुभ्रम'तरिक्ष तत्र भवा दिश. वि व्यवृणोत्। किंच सतोऽभिव्यक्तस्य स्थूलस्यासतोऽनभिव्यक्तस्य सूक्ष्मस्य च मूर्तस्य घटपटादेरमूर्तस्य वाय्वादेश्चेति वा योनि प्रभव वि व्यवृणोत्। वृणोतेर्लङि तापि तुसे गुणे च व इति रूपमडभाव आर्षे । "बहुल छन्दस्यमाङ्योगेऽपीति" (पा ६-४-७५) वचनात् ॥

१. उपरान्त सीमित्यस्य परिग्रहार्थीयत्वम् ।

२. अनुबन्धमित्युच्चारणकाले प्रयोजनवशादुपबध्यमानम् । संज्ञाकरण सज्ञात्वप्रयोजनम् संज्ञाक्रियतेऽनेनेति ल्युट् ( पा. ३।३।११७ ) ॥

३. अवधिविशिष्टो हि सर्वार्थ. सीमशब्देन विवक्षितस्ततस्तसिनाऽवध्यर्थेऽभिहिते सर्वार्थ एवावशिष्यते। विशिष्टवाचकपदाना सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति नियमात् । अत्र पद शक्त नतु "सुप्तिङन्त पद" (पा॰ १-४-१४)मिति परिभाषितम् ॥

४ मन्त्रार्थकरणकाले दुर्गोक्ति मूलोक्ति चानुसृत्यैतद्व्याख्यानम् । महीधरमते तु मर्यादार्थस्यैवेदमुदाहरण सीमत सीमात मर्यादा भूगोलमध्यभागमारभ्येति तदर्थ स आह । एतदेवात्र द्वितीयोदाहरणदानस्यास्वरसमूलमपि तेनैव सूचित पूर्वोदाहरणमेवोभयार्थविषयत्वमिति राद्धान्त ॥

इदानीं शब्दसारूप्यप्रसक्तं निर्ब्रवीति-**सीम्नःसीमत** इति । **अपिवा**-अथवा ग्रामादेर्मर्यादार्थस्य नान्तस्य सीमन्शब्दस्यापि पूर्ववत्तसिलन्तस्य "स्वादिष्वि" (पा० १-४-१७) ति पदत्वान्नलोपे सीमत इति संभवतीत्याह—**सीमातो मर्यादात** इति । अत्र द्वितीयान्तात्सार्वविभक्तिकस्तसिरिति महीधरस्वरसः ॥

इदानीं निर्वचनप्रसक्तं सीमाशब्दार्थं निर्ब्रवीति—

**सीमा मर्यादा विषीव्यति देशाविति ॥ ३८ ॥**

सीमन्शब्दो मर्यादार्थः । कुतः ? **देशौ** पूर्वापरौ **विषीव्यति** विगतसन्तानावच्छिन्नौ (विभक्तौ) करोतीति हेतोर्**मर्यादा सीमे**त्युच्यते । तथाच "सीमसीमे स्त्रियामुभे" इत्यमरव्याख्यायां महेश्वरः द्वे ग्रामादेर्मर्यादायामित्याह "सीमाऽघाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रिया"मिति मेदिनीच । स्थितिरत्र मर्यादा "मर्यादा धारणा स्थिति"रित्यमरः । अयं चार्थतो निर्वचनक्रमः । सीमेति तु "षिञ् बन्धने" (स्वा. उ.) इत्यस्य "नामन्सीमन्नि" (उ० ४-१४०) त्यादिना मनिन्नन्तो निपातः । सिनोति बध्नाति देशावेतावानेवायमित्येवं सा सीमा ॥

**त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम् ॥ ३९ ॥**

निपातत्वेनैतदपि संदिर्ह्यते । वक्ष्यते हि "निपात इत्येके" (नि. १-३-३)इति॥ अतस्त्व इति ह्येवं निपातकाण्ड उदाहियते । संशयपरिशोधनाय त्व इत्येतद्वि**निग्रहार्थीय**मिति व्याख्यातम् (३१पृ. १पं.) स्वरविप्रतिपत्तिं निराकरोति—**अनुदात्तमिति** । "तत्त्वसमसिमेत्यनुचानीति" (फि. ४-१८) सर्वानुदात्त इत्यर्थः ॥

**अर्धनामेत्येके ॥ ४० ॥ २ ॥**

अर्धस्यैवैतन्नाम त्व इत्येवमेके आचार्या मन्यन्ते इति शेषः । वक्ष्यति चायमपि । त्वो नेम इत्यर्धस्य (निरु. ३-४-१) इति । तदेतत्प्रकरणोपपदाभ्यामध्यवसेयं, क्वार्धनाम, क्व सर्वनामेति ॥ २ ख. सू. ॥

यथात्र सर्वनाम तमेवमुदाहियते—

**ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु ।**
**ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥ १ ॥**
(ऋ. सं. ८-२-२४-११)

आङ्गिरसस्य बृहस्पतेरार्षम् । त्रिष्टुप् । अनया हि बृहस्पतिर्वेदितवेदार्थज्ञानं तुष्टाव ॥ अथास्यामृच्येकशब्दसमानार्थं त्वशब्दं दिदर्शयिषुरनया कर्तव्यं तावदाह—

**इत्यृत्विक्कर्मणां विनियोगमाचष्टे ॥ २ ॥**

अयमर्थः । होत्रादयः षोडशर्त्विजो भवन्ति । सप्तदशाः सप्तदश । तेषु चत्वारो महर्त्विजः । होता, उद्गाता, ब्रह्मा, अध्वर्युश्चेति । तेषां होत्रादीनां चतुर्णामृत्विजां यानि कर्माणि ऋक्शंसनादीनि तेषां **विनियोगं** विविच्य नियोगं नियोजनम् (कर्तृपुरुषेष्वासञ्जनम्) इति-अनयर्चाऽऽचष्टे ब्रवीति ॥

कथम्-इति प्रथमं पादं विवृणोति—

---

१. निपातत्वे हि "निपाता आद्युदात्ताः" (फि० ४-८०) इत्याद्युदात्तत्वं प्रसज्येत ॥

**ऋचामेक. पोषमास्ते पुपुष्वान्होतर्गर्चनी ॥ ३ ॥**

य एते चत्वारो महर्त्विजस्तेषा मध्ये **एको होता** यज्ञकाले स्वकीयवेदगतानाम् **ऋचां पोषं** यथाविधिकर्मणि प्रयोग **पुपुष्वान्** ( एको धातुरनुवादार्थं ) बह्वी ऋच पुष्यन् शंसन् **आस्ते** । इतीयमृक् **अर्चनी** । अर्च्यते स्तूयतेऽनयेति करणे ल्युट ( पा० ३-३-११७ ) टित्वान्डीप् 'ऋच् स्तुतौ' ( भ्वा प ) तदेतदृक्श सर्वकर्म होतरि विनियुक्तम् । उक्तञ्च "यदृचैव होत्र क्रियत" ( ऐ० ब्रा ५-५-८ ) इति ॥

अथ द्वितीय पाद विवृणोति—

**गायत्रमेको गायति शक्वरीषूद्गाता ॥ ४ ॥**

**एक** उक्तादन्य **उद्गाता** एषत्वशब्दार्थं । **गायत्रं** गायत्रशब्दाभिधेय स्तोत्र साम, **शक्वरीषु** शक्वरीशब्दाभिधेयासु ऋक्षु **गायति** इत्येतत्सामगानकर्मोद्गातरि नियुक्तम् । उक्तञ्च "साम्नोद्गीथ मिति ( ए ब्रा ५-५-८ ) ॥

अथ मन्त्रार्थं पादशोऽग्रे निर्विवक्षुरुक्तार्थेषं एकपदनिरुक्त तावदाह—

**गायत्रं गायते स्तुतिकर्मण ॥ ५ ॥**

स्तुत्यर्थस्य गैधातो' ( निघ ३-१४ ) ( भ्वा प ) करणे पत्रन्। गायत्यनेनेति **गायत्रम्** ॥

**शक्वर्य ऋच शक्नोते ॥ ६ ॥**

"शक्ल शक्तौ' ( स्वा प ) अस्माद्बाहुलकात्करणे वनिपि "वनोर च' ( पा० ४-१-७ ) इति ङीब्रादेशश्च । शक्नोत्याभिरिति **शक्वर्य** ।

---

१ विनिग्रहार्थीयस्य सर्वनाम्नस्त्वशब्दस्यार्थनिर्देशोऽयम् ॥ प्रथम इत्यर्थ । तथा चोक्तम्—"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रयुज्यत ' इति ॥

२ पुन पुनर्भृश वा देवतायाथात्म्यानुचिन्तनस तानमर्मस्थानकरणानुप्रदानवतीर्थ थाकालमृचोऽधीयान इति दुर्ग ॥

३ अयमथ सायणेनोक्तस्तथाच पुपुष्वानिति वक्त त । "धातुसम्बन्धे प्रत्यया ' ( पा ३-४-१ ) इति वर्तमाने लिट् । "लिट कानज्वा ' "क्वसुश्च ( पा ३-२-१०७ ) इति क्वसु । ' लिटि धातो —( पा ६-१-८ ) रिति द्वित्वम् । 'पुष पुष्टौ" ( दि० प० ) पोषमिति णमुलन्तम् । "स्वे पुष ( पा ३-४-४० ) इति णमुल् बाहुलकादनुपपदेऽपि । अतएव यथादिषु यथाविध्यनुप्रयोग इति पुषरेवानुप्रयोग । शसन् स्तुवन् "शसु स्तुतौ ' ( भ्वा० प० ) लट शतरि रूपम् ॥ धातूनामनेकार्थत्वादेवादिकस्य पुष्ट्यर्थस्य पुषेरत्र शसत्यर्थे वृत्ति । ऋग्भाष्यभूमिकायां सायणस्तु पोषमास्ते पुपुष्वानित्यस्य पुष्टिं कुर्वन्नास्त इत्यर्थमाह । भिन्नप्रदेशेष्वाम्नातानामृचां संघमेकत्र संपाद्यैतावदिद शस्त्रमिति कृप्तिं करोति सेय पुष्टिरिति च व्याचष्ट । ऋक्शब्दोऽपि तेनैव तत्र व्युत्पादित "अर्च्यते प्रशस्यतेऽनया देवविशेष क्रियाविशेषस्तत्साधनविशेषो वेत्यृक्' इत्येवम् ॥

४ एतत्पादृगध्ययनकर्म तस्मिन् होतरि विनियुक्तम् ॥

अथैतस्मिन्नर्थे निगमं प्रमाणयञ्छक्करीशब्दे वृत्तिं दर्शयति—

**तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शक्करीत्वमिति विज्ञायते ॥ ७ ॥**

यद्यस्मादाभिरभिष्टुत इन्द्रो वृत्रमसुरं हन्तुमशकत् तत्तस्माच्छक्करीणा-मृचां शक्करीत्वमित्येवमैन्द्रब्राह्मणेऽपि ( ५-२-२ ) शक्नोतेरेव शक्वर्य इति **विज्ञायते** । लिङ्गतोऽपि हि दर्शितं भवति "आख्यातजानि नामानी"ति ॥

अथ तृतीयमृचामन्त्रपादमर्थतो व्याचष्टे—

**ब्रह्मैको जातेजाते विद्यां वदति ॥ ८ ॥**

**एकोऽपरो ब्रह्मा** नाम ऋत्विक् । जातविद्यामिति वीप्सागर्भं सप्तमीतत्पुरुषमा-पविज्ञानबलान्मला व्याचष्टे–**जातेजाते**[3] भृशमुत्पन्ने प्रायश्चित्तादौ कर्तव्ये कर्मणि । विदन्त्यनयेति विद्या "विद ज्ञाने" ( दि० आ० ) "संज्ञायां समजे" ( पा. ३-३-९९ )ति करणे क्यप् । तां वेदयित्रीं वाचमिति सायणः । विद्यात्रयहेतुत्वादात्मनो विज्ञानमिति दुर्गः । वदति एभ्य ऋत्विग्भ्य "इदमत्र कुरुते"-ति ॥ तत्रापि तत-त्कर्म विनियुक्तम् ॥

अथ ब्रह्मैव कुतो विद्यां वदतीत्यनुयुक्तस्तस्य विद्याप्रकर्षात्सर्ववेतृत्वमाह—

**ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ॥ ९ ॥**

यतस्सर्वनियमाधिकारं निर्वर्तयितुं शक्नुयादतो ह्ययं **सर्वविद्यः** । सर्वां (त्रयीं) विद्यां वेदेति "तद्धितार्थ-" ( पा० २-१-५१ ) ति समासः । "तदधीते तद्वेद-" ( पा० ४-२-५९ ) ति हि वेदार्थे "विद्यालक्षणकल्पसूत्रान्ताच्चेति वक्तव्यम्" ( वा० ४-२-६० ) इति ठक् । तस्य "सर्वादेः सादेश्च लुग्वक्तव्यः" ( वा. ) इति लुक् । तथाविधो ह्ययमधिकारी त्रयीविद्यायुक्तो येनासौ **सर्वमेव वेदितुमर्हति** अतोऽयं **ब्रह्मा** भवति । इत्थं च "अथ केन ब्रह्मत्वं क्रियत इति ? त्रय्या विद्यया" ( ऐ० ब्रा० ५-५-८ ) इति ॥

---

१. अथवात्र शकधातुः शक्तिमत्त्वेऽर्थे शक्तिश्चाने । इन्द्रमना हि या शक्करीरासीत् तासां शरणमोचपत्तिः । यथाशाभिर्मिलुभिसारा शक्तिमत्त्वं तदेव शक्करीत्वमिति पर्यवसि-तोऽर्थः । शक्तिमत्त्वं च शक्तिमत्त्वस्य भावः तत्र मतुविन्यपेये मकारीभूतो भवति । तथा च शक्तिमत्त्व इत्यभिप्रायेण शक्तिरेव प्रकार इति ॥

२. शब्दगामर्थं हि लिङ्गं मीमांसायां प्रसिद्धम् ॥

**ब्रह्म परिवृढः श्रुततः ॥ १० ॥**

श्रूयत एव ( न पर केनचित्क्रियते– ) इति श्रुतो वेदः । कर्मणि क्तः । तस्मादिति "पञ्चम्यास्तसिल्" (पा. ५–३–७) । **परिवृढः** प्रभुस्तेषां मध्ये नेता ( नायक. ) "प्रभौ परिवृढः" (पा. ७–२–२१) इति निपातः । "प्रभुः परिवृढोऽधिप" इत्यमरः । स हि त्रयीविद्यां वेद । अन्ये त्वेकैकामित्यस्य विद्याप्रकर्षोऽन्यतः ॥

अधुना शब्दसारूप्यप्रसक्तमुच्यते—

**ब्रह्म परिवृढं सर्वतः ॥ ११ ॥**

**सर्वतः** सर्वासु दिक्षु । "आद्यादिभ्यस्तसेरुपसंख्यानमि" (वा०)ति सार्वविभक्तिकस्तसि । **ब्रह्म** वेदान्तप्रतिपाद्यमृगादि वोभयमपि **एतत्परिवृढं** व्याप्तम् ॥

*अथ तुरीयपादं तस्या अर्थतो व्याचष्टे—*

**यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युः ॥ १२ ॥**

**एकोऽध्वर्युश्च यज्ञस्य मात्रां** मीयतेऽनेनेति मात्रा तां या कांचिदितिकर्तव्यतामभिषवग्रहणादिरूपां ( यज्ञशरीरं ) **विमितीते** अत्यर्थं ( नानाप्रकारं ) निर्मिमीते ( करोति ) । उ इत्यवधारणार्थो मन्त्रे । स्वस्वकर्तव्यमेव सर्वोऽनुतिष्ठति नान्यकर्तव्यमित्यवधारणा । यद्वा वितर्कार्थ. । सच सुगम इति कृत्वा व्याख्याकाले उपेक्षितः ॥ *यज्ञस्वरूपनिष्पादकत्वं चाध्वर्योर्नामनिर्वचनादेवावगम्यत इत्यध्वरशब्दमनेकधा निर्ब्रवीति—*

**अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताऽध्वरं कामयत इति वा ॥ १३**

अध्वरशब्दे पृषोदरादित्वादन्त्यलोपेऽध्वरयुरेवाध्वर्युरित्युच्यते। कथं सोऽध्वरयुरिति तत्साधयत्यवयवार्थनिर्वचनेन । **अध्वरं** यज्ञं **युनक्ति** [illegible]ङ्गसवनेन संयोजयतीत्यध्वरयु.। "युजिर् योगे" (रु. प.) डुप्रत्यय औणादिक । टिलोप । यत सोऽध्वरस्य **नेताऽन्तं** *प्रापयितेति, अध्वर्युशब्दस्यैव तात्पर्यार्थोऽयमिति सायण ।* एतदेवाभिप्रेत्याध्वर्युवेदस्य ( यजुष ) यागनिष्पादकत्वद्योतक निर्वचनं यास्को दर्शयिष्यति "मन्त्रा मननात् । छन्दांसि छादनात् । स्तोम स्तवनात् । यजुर्यजते" ( नि० ७–१३ ) रिति, अथवा **अध्वरं कामयते** कर्तुमित्ययमध्वर्यु । एतस्मिन्निर्वचने युरित्यय कामनार्थ. । वसुकामा वसुयव इति यथा ॥

**अपिवाऽधीयाने युरुपबन्धः ॥ १४ ॥**

अथवा अध्वर–( त्वत्प्रतिपादकं शास्त्र– ) मधीयानो लक्षणयाऽध्वर इत्युच्यते । मञ्चाः क्रोशन्तीतिवत् । तस्मिन्नध्वरमधीयाने ब्राह्मणे **युरित्ययमुपबन्धो** नामकरणम् । अध्वरमधीते यस्तस्य नामाध्वर्युरिति ॥ अकारलोप पृषोदरादित्वादत्रापि ॥

---

१. मीयते इति मान कर्म तन्मात्रेत्युच्यत इति दुर्ग. ॥

२. मञ्चस्थेषु पुरुषेषु क्रोशत्सु मञ्चा क्रोशन्तीति यथोच्यते तथात्राध्वरमधीयानोऽध्वर्युनाम्ना व्यपदिश्यते ॥

अथ विग्रहप्रसक्तस्याध्वरशब्दस्य तत्त्वमाचष्टे—

**अध्वर इति यज्ञनाम ॥ १५ ॥**

कथम्—?

**ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः ॥ १६ ॥**

हिंसाकर्मा हिंसार्थकः (निघ० २–१९) ध्वरधातुः । तस्मा"द्व्यर्थे कविधान-मि"ति (वा.३।३।५८) अधिकरणे कः। ध्वर्यन्ते वध्यन्तेऽस्मिन्निति ध्वरस्तत्प्रतिषेधो न ध्वरोऽध्वर इति । अहिंसो हि यज्ञः । यत्किंचित्पशुबीजादिकमत्र हिंस्यते साऽभ्यु-दयहेतुत्वात्तेषां हिंसा न भवति । द्वेषपूर्वको हि प्राणिवधो हिंसा । न तथात्रेति भवति सोऽध्वरः । तथाच श्रुतिः "न वा उ एतन्म्रियसे" ( य० वा० सं० २३–१६) इति । स्मृतिश्च "कुशलमिच्छन्ति तृणानि राजन्" इति ॥

**निपात इत्येके ॥ १७ ॥**

अयं सशब्दो निपात इत्येके आचार्या मन्यन्ते ॥

एवंसति पूर्वाभ्युपगतेऽनुदात्तत्वे ( नि. १–३–२ ) शङ्कते—

**तत्कथमनुदात्तप्रकृति नाम स्यात् ॥ १८ ॥**

तदेतत्स्येतिशब्दस्वरूपं उदात्तप्रकृति उदात्तस्वभावं तत्कथं नाम स्यात् ? ( यद्भवतोक्तं सर्वनामानुदात्तमिति ) उत्तरमाह—

**दृष्टव्ययं नु भवति ॥ १९ ॥**

दृष्टोऽनुविधिश्छन्दसि भवतीति दृष्टव्ययस्यानामेति तद्रूपा । तुशब्दोऽत्र भेदार्थ उत्तरपक्षतां द्योतयितुम् ॥ यद्वा हेतुसमुच्चयार्थ एव तुशब्दः । अयंभावः । यद्यपि "फिषोऽन्त उदात्त." (फि. सू. १–१) इति फिट्सूत्रं फिष. प्रातिपदिकस्यान्तोदात्तत्वं विदधाति, "निपाता आद्युदात्ताः" ( फि० सू० ४–८० ) इतिचाद्युदात्तत्वं, तथापि "स्वरयसमर्थिमेल्लनुधानी" (फि.सू.४–९)ति फिट्सूत्रं तदपवदति । तथा चापवाद-

स्मरणाव्ययदर्शनाच्च अनुदात्तमपि सदेतनामैव भवतीति ॥ वस्तुतस्तु । "निपाता अप्याद्युदात्ता भवन्तीति" ( फि० सू० ४-११ ) कृतापवादत्वाद्दृश्यव्ययत्वाच्च नामैवैतदित्युपपन्नमिति दुर्ग ॥

क पुनरस्य व्ययो दृष्ट इत्यपेक्षायामाह—

**उत त्वं सख्ये स्थिरपीतमाहुरिति द्वितीयायाम् ॥ २० ॥**

एकवचने व्ययो दृष्टः । त्वमित्ययमनोदात्त सच निपातस्वरेणैव भवितुमर्हति । एवम्—

**उतो त्वस्मै तन्वं विसस्र इति चतुर्थ्याम् ॥ २१ ॥**

सर्वनामत्वात्ङे स्मै ( पा. ७-१-१४ ) ॥ मन्त्रार्थस्तु ( नि. १-६-पा. ) उपरिष्टाद्व्याख्यास्यते ॥

**अथापि प्रथमाबहुवचने ॥ २२ ॥ ३ ॥**

व्ययो दृष्ट । स यथा—॥ ३ ॥

**अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ॥**
**आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे ॥ १ ॥**
( ऋ. स ८-२-२४-७ )

आङ्गिरसस्य बृहस्पतेरार्षं विद्यासूक्तं त्रिष्टुप् ॥ अक्षण्वन्त इत्यस्यार्थं निर्विवक्षुरायपादमस्या अर्थतो व्याचष्टे—

**अक्षिमन्तः कर्णवन्तः सखायः ॥ २ ॥**

अक्षि विद्यते येषामित्यर्थे "तदस्यास्त्यस्मिन्निति" ( पा० ५-२-९४ ) मतुपि "छन्दस्यपि दृश्यत" ( पा० ७-१-७६ ) इति अक्षिशब्दस्यानङि । "अनो नुट्" ( पा० ८-२-१६ ) इति मतुपो नुडागमे अक्षण्वन्त लोके पुनरक्षिमन्तः । अक्षिसंयुक्ता । एवं कर्णवन्तः कर्णविलक्षणाकाशवन्त । उपलक्षणमेतदन्येषामप्यङ्गानाम् । तथाच समानेन्द्रिया समानोदरपृष्ठपाणिपादा । अतएव सखायः समानं ख्यान ( ज्ञान ) येषा ते । बाह्येन्द्रियेषु समानज्ञाना इत्यर्थः ॥

अथात्रैकपदनिरुक्तम्—

**अक्षि चष्टेः ॥ ३ ॥**

पदस्यास्यार्थस्य चक्षिङ्धातो (अ आ.) त्रिसरीणादिकः "स्को" (पा ८-२-२९) रिति कलोप । पक्ष कल सस परत्व बाहुल्काचक्षिङ ख्यान् (पा. २-४-५४) इति

१. सर्वनामत्वेऽनुदात्तत्व छान्दसत्वाद्व्यत्यय दर्शयति । यद्यपि तत्र "त्यादादीनामन्ता ना" (फि० सू० २ पा )मिति त्रिङ. सर्वनाम्न आद्युदात्तत्व विहित तथापि तदौत्सर्गिकम् । "त्वत्वसमसिमेत्यनुच्चानी" ( फि० सू० ४ पा. )ति विशिष्यानुदात्तत्वविधानात् । विशेषविधिश्चौत्सर्गिकस्यापवाद एवेति सुप्रपादित प्राक् ॥

२. उत त्वम् उतो त्वस्मै इत्येतद्वाक्य-( पाद-) घटितमन्त्रयोरर्थस्त्वित्यर्थ. ॥

३. अनेकार्थेभ्यो धातुभ्यो व्यक्तवाग्यर्थकत्वात् पदस्यार्थस्त्वम् ॥

ख्यानादेशाभाव इडभावश्च । चकारलोपश्च पृषोदरादित्वात् । ख्यायते ( दृश्यते ) अनेन सर्वमित्यक्षि ॥

**अनक्तेरित्याग्रायणः ॥ ४ ॥**

व्यक्त्यर्थस्याञ्ज्धातोः (रु. प.) औणादिकः क्सिरनिदितामि-(पा. ६-४-२४)ति नलोपः । "चो कुः"( पा०८-२-३० ) रिति कुत्वं चर्त्वं सस्य षत्वं च अनक्ति व्यक्तं भवतीत्यक्षि । इति अग्रस्यापत्यमाग्रायणः "नडादित्वात्" (पा०४-१-९९) फक् । फस्यायन् (पा० ७-१-२) । *आग्रायण* आचार्यो मन्यते इति वाक्यशेषः ॥ यद्यप्यङ्गान्तरमपि व्यक्तमेव भवति तथापीदं तैजसत्वादन्येभ्योऽङ्गेभ्यो व्यक्ततरं भवति ॥ अत्रार्थे श्रुतिं प्रमाणयति—

**"तस्मादेते व्यक्ततरे इव भवत" इति ह विज्ञायते ॥ ५ ॥**

यस्मादेते तेजोऽवयवभूयिष्ठे **तस्मात्**कारणादित्येवं तच्छब्दबलाद्यच्छब्दमध्याहृत्य व्याख्याक्रमो निरुक्तशास्त्रकृच्छैलीपरिशीलितोऽन्यत्रापि यथावसरमूह्यः । **एते** अक्षिणी इतरेभ्योऽङ्गेभ्यो **व्यक्ततरे** स्पष्टतरे ( प्रकाशतरे ) **इव भवतः** । अन्धकारेपि ह्येते प्रकाशेते एव नक्तंचरादीना, न तथेतराण्यङ्गानि । एवं ब्राह्मणेऽपि अनक्तेरेवाक्षिणी **इति ह विचार्यमाणे ज्ञायते** ॥

**कर्णः कृन्ततेर्निकृत्तद्वारो भवति ॥ ६ ॥**

कृती छेदने धातो ( रु. प. ) *औणादिकोऽन्प्रत्ययः । गुणः । पृषोदरादित्वा-*त्तस्य न णत्वम् ॥ यद्वानिष्ठान्त एव पृषोदरादिः । उभयथापि **निकृत्त** ( छिन्न- ) **द्वार** इति **कर्णो भवति** । गर्भावस्थायामेव केनापि (दैवेन) निर्मितबिल इत्यर्थः ॥

**ऋच्छतेरित्याग्रायणः ॥ ७ ॥**

गत्यर्थस्य ऋधातो ( भ्वा प. ) औणादिकः कर्मणि नन् धातोः कुडागमश्च । गुणो णत्वं च ॥ **ऋच्छन्ति** (गच्छन्ति) शब्दा एताविति कर्णावित्येव**माग्रायणो** मन्यते ॥

*ब्राह्मणमप्येतस्मिन्निर्वचने प्रमाणयति—*

**"ऋच्छन्तीव खे उदगन्तामि"ति ह विज्ञायते ॥ ८ ॥**

**ऋच्छन्ती** (गच्छन्ती-) वैतौ **खे** आकाशेऽभिव्यक्ताः (सन्तः) शब्दाः । एतावपि च **उदगन्तां** प्रत्युद्गच्छत इव ग्रहणाय । **इति ह विचार्यमाणे ज्ञायते** खे[२] कर्णाविति ॥

द्वितीयपादमर्थतो व्याचष्टे—

**मनसां प्रजवेष्वसमा बभूवुः ॥ ९ ॥**

एवंभूता अप्येते **मनसां** सुखाद्युपलब्धिसाधनेन्द्रियाणा-(मन्तरिन्द्रियाणां) प्रजूयन्ते गम्यन्ते इति **प्रजवाः** गम्यप्रदेशाः प्रकाशाः । जु इति सौत्रो धातुर्गतौ वेगे च

१. "पाघ्राध्मेति" ( पा. ७-३-७८- ) ऋच्छादेशः शिति ( शपि ) परे विग्रहवाक्ये दर्शितः । एवमन्यत्राप्यूह्यम् ॥

२. शरीरस्य शिरसो वा ऊर्ध्वं गते ( उच्चैः स्थिते ) स्थाने आकाशलक्षणे ॥

३. पुरुषभेदाद्बहुवचनम् । मनो हि प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं चेति न्यायविदो वदन्ति ॥

तस्मात्कर्मणि "ऋदोरप्" (पा० ३-३-५७) इत्यप्प्रत्यय गुण । तेषु (मनोगम्येषु) **असमा** अतुल्या **बभूवुः** भवन्ति । छान्दसो लिट् ॥ केचिदूहापोहनधारणाप्रयत्कुत्वसमर्था । केचित्ततोऽनल्पा । केचिदल्पमेधसोऽपरेत्वमेधस एव ॥

कथमसामान्यमिति तृतीयपादमर्थतोव्याख्यन्-दृष्टान्तेन प्रतिपादयति—

**आस्यदघ्ना अपर उपकक्षदघ्ना अपरे ॥ १० ॥**

आस्यं प्रमाणं येषा ते **आस्यदघ्नाः** "प्रमाणे द्वयसज्दघ्नञ्मात्रच" ( पा० ५-२-३६ ) इति ऊर्ध्वमाने दघ्नच्प्रत्यय । आसदघ्ना एव आदघ्ना । पृषोदरादित्वादास्यशब्दस्याकारादेश स्यशब्दलोपो वा। आदघ्ना **एव आदघ्नासः**। "आज्जसेरसुगि"-(पा० ७-१-५०)ति जसोऽसुगागमश्छान्दस । ह्रदा इवेति तुरीयपादस्यमनानुसन्धीयतेऽर्थवशादुपमानलाभाय । तथाचास्यप्रमाणोदका ह्रदा इवेति मध्यमप्रज्ञानाह । **अपरे** इति त्वे इत्यस्यार्थो । सर्वनामत्वात् "जस शी-" (पा० ७-१-१७) भाव । अथ ततोऽल्पप्रज्ञानाह **उपकक्षदघ्ना** इति । कक्षस्य समीपमुप कक्षं तत्प्रमाणं येषान्त उपकक्षदघ्ना पूर्ववदत्रापि साधनप्रक्रियोह्या । कक्षो बाहुमूलम् "बाहुमूले उभे कक्षा" तिस्मर । कक्षसमीपप्रमाणोदका (अल्पोदका) ह्रदा इवेति । उ पादपूरण एव ॥ तथाचात्र आदघ्नास इत्यतिपरोक्षवृत्तिं तमिमं परोक्षवृत्तितामास्यदघ्ना इत्यनेन सपाद्यास्यप्रमाणोदका इत्येव प्रत्यक्षवृत्तितामापादितवान् । इति ध्येयम् ॥

अथानैकपदनिरुक्तम्—

**आस्यमस्यते· ॥ ११ ॥**

क्षेपार्थस्यासुधातो ( दि प ) "ऋहलोर्ण्य" ( पा० ३-१-१२४)दिति ण्यत् । अस्यते क्षिप्यते खेतदाभिमुख्येनान्नमित्यास्यम् ॥

**आस्यन्दत एनदन्नमिति वा ॥ १२ ॥**

आङुपसृष्टस्य स्रवणार्थस्य स्यन्दते ( भ्वा० आ० ) "अन्येष्वपि दृश्यते" ( पा०३-२-१०१ ) इति ड । अत्र कर्तृ । एनदिति कर्म । "अन्वादेशे नपुसके एनद्वक्तव्य" (वा २-४-३४ ) इति एनदादेशो द्वितीयैकवचने । एतदास्यमास्न्दते द्रवीकरोत्यन्नम् । यद्वा एनदिति कर्तृ बाहुलकात्प्रथमैकवचनेऽप्येनत् । **अन्नं** ( शुष्कमपि ) प्राप्यासमन्तात्स्रवत्येव श्लेष्माण येन तदार्द्रीकृत भक्षितु शक्यते ॥

अथ दघ्नशब्द परिमाणार्थक नाम मत्वा निर्वक्ति—

**दघ्नं दघ्यतेः स्रवतिकर्मण· ॥ १३ ॥**

स्रवत्यर्थस्य दघधातो कर्मणि बाहुलकादौणादिको नन् इडभावश्च । स्रुततरमिव

---

१. ईषदर्थ । नञोऽत्राल्पार्थे वृत्ति । अनुदरा कन्येत्यत्र यथा । पठन्ति च । तत्सादृश्यमभावश्च तदन्यत्व तदल्पता । अप्राशस्त्य विरोधश्च नञर्था षट् प्रकीर्तिता । इति॥ अब्राह्मण । अपापम् । अनश्व । अपशवो वाऽन्येगोऽश्वेभ्य । अधर्म इति शिष्टमुदाहरन्ति॥

२. प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतावुभाविति हि नियमस्तथा चात्र ( सूत्रे ) प्रमाणपदमूर्ध्वमानपरमेतद्विषये ॥

तद्भवत्युत्तरात्परिमाणात् ॥ यद्यप्ययं स्नादौ धातने पालने च पठितो न दिवादौ तथापि यास्कवचनाद्दिवादित्वं सवत्यर्थकत्वं च कल्प्यते । उक्तं च । दिवादिषु भ्वादिवदाकृतिगणत्वेन क्षीयते मृग्यतीत्यादिसिद्धिरितीति ॥ एतच्च शब्दसारूप्याद्न्यथापि निरुक्तं, प्रकृते तु दस्यत्स्नातय एव प्रमाणार्थ इति व्यक्तमुक्तमधस्तात् ॥

**दस्यतेर्वा स्याद्विदस्ततरं भवति ॥ १४ ॥**

उपक्षयार्थस्य दसुधातोः ( दि. प. ) औणादिको नन्सस्य घो बाहुलकादिड्भावश्च। **दस्यतेर्वा** दभ्रं **स्यात्** । इत्येवमपरथा व्युत्पाद्यार्थतो निर्ब्रवीति–**विदस्ततरम्**उपक्षीणतरं **तद्भवत्युत्तरस्मात्परिमाणादिति** ॥

अथ तुरीयं पादमर्थतो व्याचष्टे—

**प्रस्नेया ह्रदा इवैके प्रस्नेया ददृशिरे स्नानार्हाः ॥ १५ ॥**

स्नाता इत्यस्यार्थतो निर्वचनं **प्रस्नेया** इति । तत्रहि स्नातेः ( अ. प. ) कृत्यार्थे ( पा० २–४–१४ ) त्वन् प्रत्ययः । स च "अर्हे कृत्यतृचश्च" ( पा० ३–३–१६९) इत्यर्हार्थे भवति । अत्रापि प्रकर्षेण स्नातुं योग्या इत्यर्थे स्नातेः "अचो यत्" ( पा० ३–१–९७ ) इति यत् । "ईद्यति"–( पा० ६–४–६५ )तीत्वे गुणे **प्रस्नेया** इति **स्नानार्हा** अक्षोभ्योदका इति तदर्थः । एवंभूता **ह्रदा इव एके** प्रधानभूता महान्तः प्रज्ञया **प्रस्नेया** अगाधा. ( अगाधप्रज्ञाः ) **ददृशिरे** दृश्यन्ते । छान्दसो लिट् वर्तमान इह भवति । अत्र त्वेइत्यस्यार्थ एके इति । ददृशे इत्यस्य च ददृशिरे इति । मन्त्रे उः पादपूरण एव ॥

अथात्रैकपदनिरुक्तम्—

**ह्रदो ह्रादतेः शब्दकर्मणः ॥ १६ ॥**

( अव्यक्त ) शब्दार्थस्य ह्रादधातोः ( भ्वा. आ. ) पचाद्यच्। बाहुलकाद्ध्रस्वः । ह्रादते अव्यक्तशब्दं ह्रसावभिहन्यमानः करोतीति **ह्रदः** ॥

प्रकारान्तरेण निर्वक्ति—

**ह्रादतेर्वा स्याच्छीतीभावकर्मणः ॥ १७ ॥**

**शीतीभावार्थस्य** ह्रादी सुखेचेति धातो–( भ्वा. अ ) रुक्तवत्सिद्धिः । ह्रस्य रत्वं पृषोदरादित्वात् । ग्रीष्मेऽप्यसौ शीतल एव भवञ्जनान् सुखयतीति ह्रद इत्युच्यते ॥

**अथापि समुच्चयार्थे भवति ॥ १८ ॥ ४ ॥**

**अथापि** अयमपरो निपातः **समुच्चयार्थे भवत्ये**कतमः । त्वत् इति ॥ ४ ॥

अथास्योदाहरणम्—

**पर्यायाः इव त्वदाश्विनम् ॥ १ ॥** ( ऋ. ग्र. ९२–१० )

इत्याह । किमुक्तं भवति—

**आश्विनं च पर्यायाश्चेति ॥ २ ॥**

इत्येवम् । त्वदिति समुच्चयार्थे भवति ॥

---

१. अशीतस्य शीतस्य भवनं शीतीभावः । अभूततद्भावे "कृभ्वस्तियोगे सम्पद्यकर्तरि च्वि"–( पा. ५–४–५० ) रिति च्विः । 'अस्य च्वौ'–( पा. ७–४–३२ ) ईत्वम् ।

**चिदित्नेर.** केचिन्मनुष्या **निष्क्रास.** निर्वसना । अपिच । **भूरितोका** बहुपत्या (दरिद्रा) वृकान्मार्गरोधकात्स्तेना (निघ० ३-२४) च्छृगालादिव वा बालघातकाद्धिमादिति शेष । **विभ्यस्सन्त.** पुन पुनर्भृश वा बिभ्यत सन्त हेमन्ते **ववाशिरे** पुन पुनर्भृश वा वाशन्ते कुत्सित शब्द कुर्वन्ति । वाश शब्दकुत्सायाम् (भ्वा आ) किम्—

**शिशिर जीवनाय ॥ ५ ॥**

**शिशिरमस्माक जीवनाय,** आगच्छतीति शेष । अल्पतरशीत हि शिशिरं सुख तत्र जीविष्याम इत्यभिप्राय ॥ अत्र मन्त्रे वमित्यनर्थक पादपूरण एवेति स नोक्त ॥

अथ निगमप्रसक्त शिशिरशब्द द्विधा निर्ब्रवीति—

**शिशिरं शृणाते शम्नातेर्वा ॥ ६ ॥**

हिंसार्थकस्य शृधातो (क्र्या उ) अजिरशिशिरेत्यादिना (उ १-५३) निपात । शृणाति हिनस्तीति **शिशिरम्** । अर्धर्चादि (२-४-३१) । अथवा **शम्नाते** हिंसार्थस्यैव । नार्थकृतो विशेष । किंतु साधनकृत । हिनस्ति तस्मिन्कालेऽप्रति वध्यमानो दवाग्निरतिशयेन शुष्कानोषधिवनस्पतीन् इति ॥

अथ इमित्यस्योदाहरणम्—

**एमेन सृजतासुते ॥ ७ ॥** (ऋ सं १-१-१७-२)

इति । एपैन्द्री गायत्री मधुच्छन्दस आर्षम् ॥

अत्र ईमिति पदपूरण इति बोधयितु पादार्थमाह—

**आसृजतेन सुते ॥ ८ ॥**

मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये ॥२॥ इत्यस्य शेष । हे अध्वर्यव ! **सुते**ऽभिपुते चमसस्थे सोमे **एनं** सोम**मिन्द्राय**न्द्रार्थ**मासृजत** आभिमुख्येन सृजत । पुनरभ्युन्नयतेति सार्थण । कीदृशमेन **मन्दि** हर्षहेतु **चक्रिं** साधुकरणशील

वातयक्ष्मस्तादृशादुत राजयक्ष्माद्रोगात् मुञ्चामि मोचयामि (अन्तर्भावितण्यर्थ) निष्प यामि । किमर्थं जीवनाय कम् । जीवनार्थम् । इहलोके चिरकालावस्थानायेत्यर्थ । कमिति पदपूरक एवेति ॥ यक्ष्मशब्दोनाकारान्तोराजदन्तादिषु पठित ॥ (पा २-२-३१)

१ अत्र किंशब्दोऽनुक्तोऽप्यर्थवशादध्याहृत । इदितिपदपूरण एवेति वयमुत्प्रश्याम ॥

२ वदन्त इति दुर्ग । वश कान्तौ (अ प) व्यत्ययेन इयन्त्रा गनेपदे । वान्तिरिच्छा । सुखमिच्छन्तीत्यर्थ ॥ छान्दसो लिट् लडर्थे ॥

३ शीतार्त्तस्य दन्ताभिघातपूर्वक शब्दो दारिद्र्यमूलक कुत्सित एव भवतीति भाव ॥

४ अन्ये त्वाहु । तत्रहि प्रायेण प्रचुराणि शस्यानि भवन्तीति शिशिरजीवनार्थं तेषाम् ॥ इति ॥

५ अय क्र्यादावपठितोऽपि वैदिक वाधात्वोध्य । तथाच "बहुलमेतन्निदर्शन"मिति धातुपाठपठितगणावासिरसमुपान्त्योक्तम्-(सि कौ) अन्येतु दशगणीपाठो बहुलमित्याहु । तेनापठिता अपि सौत्रलौकिकवैदिका बोध्या इति ॥ तेनायश्रुरादिरपीहत्ववादि ॥

६ पुत्रामभिषवमगणे पुनरभ्युन्नयनमापस्तम्बेनोक्तम् । तथाचाग्निष्टोमप्रकरणे आ० सत्रम् "होतृशारणं चमसाध्वर्यव सकृत्सकृद्हुत्वा शुक्रस्याभ्युन्नीयोपावर्त्तध्वमिती"ति ॥

कीदृशायेन्द्राय मन्दिने हर्षयुक्ताय । विश्वानि सर्वाणि कर्माणि चक्रये कृतवते । सर्वकर्मनिष्पादनशीलायेत्यर्थः ॥ २ ॥

अथेदित्यस्योदाहरणम्—

**तमिद्वर्द्धन्तु नो गिरः** ॥ ९ ॥ (ऋ सं ७-१-२०-१४)

इति । गायत्र्येषा सौमी । अमहीयोराङ्गिरसस्येयमार्षम् ॥

अत्रेदिति पादपूरण इति बोधयितुं पादार्थमाह—

**तं वर्द्धयन्तु नो गिरः स्तुतयः** ॥ १० ॥

वत्सं न शिश्वरीरिव । यः इन्द्रस्य हृदंसनिः ॥ १४ ॥ इत्यस्याः शेषः ॥ अर्थश्च—**नोऽस्माकमेता गिरो** यावस्तुतौ विनियुक्ता वाचः स्तुतिरूपास्तं सोमं **वर्द्धन्तु** वर्द्धयन्तु (अन्तर्भावितण्यर्थः)। यः सोमः **इन्द्रस्य हृदंसनिर्हृदयस्य** सम्भक्ता। तत्र दृष्टान्तः । **वत्सं** बालं **शिश्वरीरिव** यथा शिश्वर्यो बद्धपयस्का मातरो वत्सं वर्द्धयन्ति तद्वदिति ॥ १४ ॥

अथ निगमप्रसक्त 'गिरः'—इत्येतन्निर्वक्ति—

**गिरो गृणातेः** ॥ ११ ॥

गॄ शब्दे (क्र्या० प०) इति धातोः क्विप् । "ॠत इद्धातोः" (पा० ७-१-१००) इतीत्वं रपरत्वम् ।

अथोकारस्योदाहरणम्—

**अयमु ते समतसि** ॥ १२ ॥ (ऋ सं १-२-२८-४)

इति । शुनःशेपो (हरिश्चन्द्रमखे वधाय) नियुक्त आत्मानं मोचयितुमिच्छन्नेतया गायत्र्येन्द्रं तुष्टाव ।

अत्रोकारः पदपूरण इति व्याचष्टे—

**अयं ते समतसि** ॥ १३ ॥

कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥ ४ ॥ इत्यस्याः शेषः । हे इन्द्र ! **अयं ते** त्वदर्थं सोमः (अयं त्वं नित्यमेव **समतंसि** सपतसि तासु तासु क्रियास्वाऽऽहूयमान इति वाक्यशेषोऽर्थवशाद्बोध्य । अत्र दृष्टान्तः **कपोत इव गर्भधिम्** । 'कवेरोतच्पश्च' (उ सू १-६२) इति साधुरव्युत्पन्नो वा कपोतः कम्पतनः कुत्सितपतनो वेति दुर्गः । स यथा गर्भधिं गर्भधारिणीं कपोतीं अण्डाश्रयं वा नीडं प्रति पुनः पुनः पतति तद्वत् । सोऽयमृत्विग्भिस्त्वदर्थमभिषुतः सोमः । अथ त्वम

1 अत्र व्याचक्षते—वत्सं संशिश्वरी एकशिशुका बह्व्यो गाव इव । यथा सूतवत्सा पर्यायेणैक वत्सं स्वैः स्वैः पयोभिर्वहनादिसमर्थं कुर्युः । एवमस्माभिः सोमं वर्द्धयन्तु प्रजातवीर्यं कुर्वन्तु देवतर्पणायत्येवम् ॥

2 अत सातत्यगमने (भ्वा० प०) सातत्येनाविच्छेदेन (नैरन्तर्येण) गमनं सातत्यगमनं तत्फलितमर्थमाह नित्यमेव सम्पतसीति । पतॢ गत्यर्थे एव (भ्वा० प०) इति ॥

3 गर्भोऽस्या धीयत इति "कर्मण्यधिकरणे चेति (३ ३-९३) किप्रत्ययः । आलोपः (६-४-६४) ॥

स्मामि करिष्यति [1] मोचयास्मान्। किं वा वच (एव) तदेतन्नः स्तुतिलक्षण न ऊहसे न वितर्कयसि रोत्स्यमाणानाम् [2] केनाप्यभिप्रायेण वयमेतद्रूम । चैवं युष्मद्गुणैर्न सयुक्तोऽय सोमो यदिम परिगृह्यास्मानतो यूपाश्च मोचयसि। किं वा वच ऐवैतच्छुत्वाऽवबुध्यार्थमवधार्यैतानमस्मान् कारुण्यान्मोचयास्मान्किन्तेऽस्माभिरयमेवेऽस्मत्त प्रतिविशिष्टतर सोमोऽभिषुत इति तात्पर्यार्थ ॥ ४ ॥

**इवोऽपि दृश्यते ॥ १४ ॥ ५ ख. सू. ॥**

कदाचिदनर्थक पदपूरण एवेति वाक्यशेष ॥

निदुदाहरणम्—

**सुविदुरिव, सुविज्ञायेते इव ॥ १ ॥**

इत्येते उदाहरणे। तत्र सुष्ठुविदुर्यत्र ब्राह्मणा इत्यादयस्यार्थ । अत्रेवोऽनर्थक एव वाक्यपूरण. । सुष्ठु विज्ञायेते यज्ञो नक्षत्रच ब्राह्मणैरिति द्वितीयस्यार्थ । अत्रापीवोऽनर्थक एव वाक्यपूरण ॥

इत्येव पदपूरणान्व्याख्याय निपातसमुदाय दर्शयति—

**अथापि नेत्येष इदित्येतेन संप्रयुज्यते परिभये ॥ २ ॥**

निपातसमुदायाधिकारार्थोऽयमथशब्द । इति सभावने। अथायमेवेदिति केवल प्रयुज्यमान पदपूरणो भवति। **अपि चैष एव न इत्येतेन** सयुच **प्रयुज्यते परि** सर्वतो **भये** अर्थे इति शेष । तद्यथा—

**हविर्भिरेके स्वरित. सचन्ते सुन्वन्त एके सवनेषु सोमान् ॥**
**शचीर्मदन्त उत दक्षिणाभिर्नेज्जिह्मायन्त्यो नरकं पताम ॥ १ ॥**

**इति ॥ ३ ॥**

नारदेन किल वञ्चयितु विप्रलभ्यमाना असुरपत्न्यो भर्तॄन्प्रति, तमनेन मन्त्रेण प्रत्यूचु । **एके** तावत् **इतो** भूलोकात् **हविर्भि** पुरोडाशादिभिर्निमित्तभूतै **स्व.** स्वर्गलोक **सचन्ते** गच्छन्ति स्म ॥ अथ **एके सवनेषु** यज्ञेषु **सोमान्सुन्वन्त.** अभिषुण्वन्त । तेन कर्मणेत्यर्थ । अन्ये **शची**· शच्या वाचा स्तुतिभि । सुव्यत्ययश्छान्दस । **मदन्त.** मादयन्त ( अन्तर्भावितण्यर्थ ) देवास्तर्पयन्त । **उत** अपिच **दक्षिणाभिः** स्व सचन्ते इत्येतदेवानुषज्यते। (तत्रैवसति। वयमेतेषा स्व श्रेयसोपायानामसत्वाद्भर्तॄं परिचरेम) **नेदिति**परिभयोक्ति । वयमेवैपार्मेष्युपजिह्मा

[1]. अयमपि कृत्य इति न दृढ प्रतीम । दुर्गेणापि "नेजिह्मायन्त्यो नरक पताम—"ति वाक्यमुक्त्वा 'सूत्र शेष" इत्यभिधाय केचित्त्वेव इत्यशेषमत्राधीयत इति हविर्भिरित्यादिश्लोकमभिदधौ ॥

[2] प्राणिषु तेन तेनाप्युपायेन स्व श्रेयस प्रत्यभ्युद्यतेषु सत्सु ॥

[3]. अस्माभिरशक्यानुष्ठानत्वादिति तात्पर्य्यम् ।

[4] स्वभर्तॄणाम्पुरस्तात् ( अग्रे ) सनीच(?)मैनपहाय कपटमाचरन्त्यो नरक पताभेति सम्भावयाम ॥

यस्यो जिह्म-(कपट-) माचरन्त्यो (भगवन्!) नरकं पताम । नह्यन्यो भर्तृपरिचर्यात स्त्रिया कश्चन धर्मोऽस्तीति भाव ॥ १ ॥

नरकशब्दं निर्ब्रवीति—

**नरकं न्यरकं नीचैर्गमनम् ॥ ४ ॥**

**नीचैरस्मिन्नयते गम्यत इति नरकम्** । निपूर्वाद्गत्यर्थादयधातो ( भ्वा प. ) अधिकरणे वुन् गुण नीत्यय नीचैरित्यर्थकस्तस्य नादेश । पृषोदरादित्वात्ततश्च शकन्ध्वादेराकृतिगणत्वात्पररूपम् । यद्वा इकारलोप एव पृषोदरादित्वादित्याह—न्यरकमिति ॥

**नास्मिन्रमणकं स्थानमल्पमप्यस्तीति वा ॥ ५ ॥**

**वा**-अथवा **नास्त्यस्मिन् रमणकं** रतिजनक **स्थानमल्पमपीति** नरकम् । न रतिकरम् । न रमणकमितिवाऽर्थं पृषोदरादित्वाद्वर्णलोपेन वर्णविपर्ययेण वा साधु ॥

**अथापि न चेत्येष इदित्येतेन संप्रयुज्यतेऽनुपृष्टे ॥ ६ ॥**

अथाप्ययमपरो निपातसमाहारो **न चेति** । एष इदित्येतेन संयुक्त प्रयुज्यते केनचिदनुपृष्टे ( सति प्रतिवचनं भवति ) तद्यथा—

**न चेत्सुरां पिबन्तीति ॥ ७ ॥**

कश्चित्कंचित्पृच्छति तिष्ठन्ति गृहे वृषला [1] इति । स प्रत्याचष्टे तिष्ठन्तीति । ततो यदि तिष्ठन्ति किं[2]मिति नागच्छन्तीति पुनरनुपृष्टे प्रतिवक्ति न चेदिति । यदि **सुरां न पिबन्ति** इत्यर्थ. ॥

अथ सुरापदं निर्ब्रवीति—

**सुरा सुनोतेः ॥ ८ ॥**

सा ह्यभिषूयतेऽन्नैर्द्रव्यै पिष्टादिभिरिति **सुरे**त्युच्यते । षुन् अभिषवे (स्वा.उ.) अस्मादौणादिको रक्प्रत्ययः कर्मणि । कित्वाद्गुणाभाव ॥

अथोपक्रान्तं निपातलक्षणमुपसहरति—

**एवमुच्चावचेष्वर्थेषु निपतन्ति त उपेक्षितव्या॰ ॥९॥ ६ ख. सू. ॥**

**इति या. मु. प्र. नि शा. प्र. ध्या. तृ. पादः ॥**

**एवम**नेन प्रकारेण **उच्चावचेषु** बहुप्रकारेषु **अर्थेषु निपतन्ति** प्रयुज्यन्तेऽन्येऽपि समाहृता द्विशा अपि असमाहृताश्चापि कियन्तस्ते लक्षणैशास्त्रमेतच्चार्थनिर्वचनशास्त्रमुपेत्योपगम्यानुप्रविश्योपेक्षितव्या द्रष्टव्या क वस्मिन्नर्थे वर्तत इत्येवम् परीक्ष्या इत्यर्थं ॥ इति श्रीमद्यास्कमुनिप्रणीतनि. लघुविवृतौ नैघ काण्डे प्रथमाध्यायस्य तृतीय पाद ॥*॥

---

१. पुन. पृष्टे । प्रश्नानन्तरमुत्तरे दत्ते पुन प्रश्ने सतीति यावत् ॥

२. तर्हि किमर्थम् ॥

३ पैष्टी, गौडी, माध्वीत्यादिसुराभेदा ॥

४ अभिषवोऽत्र सुरासन्धान ( सुरोत्पादनप्रकार ) नतु स्नानादि ॥

५ व्याकरणम् ॥

## १ अ० ४ पादः ।

**इतीमानि चत्वारि पदजातान्यनुक्रान्तानि ॥**
**नामाख्याते चोपसर्गनिपाताश्च ॥ १ ॥**

**इती**त्ययमधिकारसमाप्त्यर्थः । **इमानि** अनुपदोक्तानि **चत्वारि पदजातानि** चतस्रः पदजातयः पदसामान्यानि "जातिर्जातं च सामान्य"मित्यमरः । **अनुक्रान्तानि** पूर्वमाख्यातानि, ततो **नामानि**, तत **उपसर्गाः**, ततो **निपाता** इत्येवमानुपूर्व्येण **क्रान्तानि** वर्णितानि, व्याख्यातानीति वाक्यशेषः । कतमानि पुनस्तानि ? *नामाख्याते चोपसर्गनिपाताश्चेति।* अयञ्च प्रतिज्ञाभ्यासो निगमनार्थः । प्रतिज्ञाभ्यासो हि निगम इत्युच्यते ।

**तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ॥ २ ॥**

**तत्र** तस्मिन्नेव पदचतुष्टये यानि **नामानि** तानि सर्वाण्येवाविशेषेण**आख्यातजानी**त्येवं शकटस्य गोत्रापत्यं "नडादिभ्यः फक्" (पा०४-१-९९) फक्यायन् (पा०७-१-२) आदिवृद्धिः। **शाकटायन** आचार्यो ब्रवीतीति वाक्यशेषः । तथाच पतञ्जलिरपि-"सर्वनाम-धातुजमाह शकटस्य च तोकेमि"ति महाभाष्य आह । **नैरुक्तानां** निरुक्तशास्त्रविदां "तदधीते तद्वेदे" (पा० ४-२-५९) अण् आदिवृद्धिः । (पूर्वेषां सर्वेषामविशेषेण गार्ग्यवर्ज्यं) **चैष समयः** सिद्धान्तः । "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः ॥

तदत्र मतान्तरमाह—

**न सर्वाणीति गार्ग्यः ॥ ३ ॥**

**न सर्वाणि** नामान्याख्यातजान्यपितु कानिचिदेवेति वक्ष्यमाणेन तद्यत्रेत्यादिना संबन्धः । इति गर्गस्य गोत्रापत्यम् "गर्गादिभ्यो यञ्" (पा० ४-१-१०५) आदिवृद्धिः । **गार्ग्य** आचार्यो ब्रवीतीति वाक्यशेषः ॥

न केवलं गार्ग्य एवापितु—

**वैयाकरणानां चैके ॥ ४ ॥**

व्याकरणं व्याक्रियन्ते धात्वादिप्रविभागेण व्युत्पाद्यन्ते शब्दा अनेनेति करणेऽर्थे व्याङ्पूर्वात्करोतेः "करणाधिकरणयोश्च-" (पा० ३-३-११७) इति ल्युट् । तद्विदन्तीति **वैयाकरणाः** । वेदितर्यण् तद्धितः (पा० ४-२-५९) आदिवृद्ध्यपवाद ऐजागमः (पा०७-३-३) **तेषां**मध्ये **चैके** पाणिनिप्रभृतयो न सर्वाणीत्युक्तमर्थं ब्रुवते ॥ अतएव 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति तेषां समयः ॥

---

१. व्याख्यालक्षणमुत्तमधस्तात् ( २ पृ. २१ ) ॥ तत्राक्षेपसमाधाने नामविषये अवशिष्येतेऽन्यत्सर्वं लक्षणोदाहरणमुखेन दर्शितमिति व्याख्यया वर्णितानीत्यस्य तात्पर्यम् ॥

२. नाम्नस्तु किञ्चिदवशिष्यत इति यदुपप्रेक्षितमधस्तात्प्रतिज्ञातञ्च "तत्पदचतुष्टयलक्षणानन्तरं चतुर्थपादेन वक्ष्यत" इति । तदत्र यथावसरं विशेषचिन्तापक्षमनुसृत्याक्षेपसमाधानरूपव्याख्याधर्मेणोच्यते ॥

३. "अपत्यं तोकं तयोः सम-" इत्यमरः ॥

४. सिद्धान्तः । "समयाः शपथाचारकालसिद्धान्तसंविद" इत्यमरः । तेषां पाणिनीया-

**तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणे-**
**नान्वितौ स्यातां सँविज्ञातानि तानि ॥ ५ ॥**

तदेतत्प्रपद्यते गार्ग्यपक्षेणेति पर्युपयुक्तस्तच्छब्दः । इह हि त्रिधा व्यवस्था नाम्नाम् । प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि च नामानि भवन्ति । तत्र-**यत्र** येषु नामसु **स्वर** उदात्तादि । **संस्कारः** प्रकृतिप्रत्ययादि । **तौ समर्थौ** सङ्गतार्थौ **प्रादेशिकेन** व्याकरणलक्षणानुगतेन **गुणेन** धातुनाऽन्विता-वनुगतौ **स्यातां** भवेतां **तानि सं**-सममैकमत्येनाख्यातजानीत्येवं **विज्ञातानि** । न तत्र विप्रतिपत्ति । यथा कारकहारकादीनि । प्रत्यक्षक्रियाणि ह्येतानि ॥ अत उत्तर नपुंनरिति वाक्यशेषो द्रष्टव्य —

**गौरश्वः पुरुषो हस्तीति ॥ ६ ॥**

इत्येवमादीनि पुनर्नैवविज्ञातानि ( प्रत्यक्षक्रियाणि ) अपि तु-प्रकल्प्यक्रियाणि । एतेषु हि प्रकल्प्यन्ते क्रिया न साक्षादुपलभ्यन्ते । अविद्यमानक्रियाणि तु डित्थो डवित्थोऽरविन्दोऽर्वाडित्येवमादीनि ॥

अथ शाकटायनमतमाक्षिपति—

**अथ चेत्सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च ( न )**
**तत्कर्म कुर्यात्सर्वन्तत्सत्वं तथाचक्षीरन् ॥ ७ ॥**

---

नाम् अव्युत्पन्नानीत्यस्योद्देश्यत्वेन विधेयत्वेन वा पाणिनितात्पर्याविषयाणीत्यर्थः । अन्यथाहि वदतो व्याघातः । उणादय इत्यस्यहि उणादिप्रत्ययान्तानीत्येवार्थः । नहि तान्यव्युत्पन्नानि भवितुमर्हन्ति । अथाव्युत्पन्नानि, नहि तर्ह्युणादिप्रत्यया तानि । उद्देश्यत्वेनेत्याद्युक्तया निमि-त्तत्वेन पाणिनितात्पर्यविषयताभ्युपगमस्तेन "अयामन्ताल्वाय्येत्विष्णुषु" (पा. ६–४–५५) इति सूत्र संगच्छते । तदेतच्छब्देन्दुशेखरे सुव्यक्त द्रष्टव्यम् ॥

१. समर्थनानामोपपत्तिरुच्यते ॥

२. यथैव हि लक्षणाविप्रतिपत्त्या स्वरोऽवस्थित एव संस्कारोऽपि यत्रेत्यर्थः ॥

३ यादि तस्मिन्द्रव्येऽवस्थिता यद्धेतुकश्च तस्य नामधेयप्रतिलम्भोऽभिप्रेत सा प्रदेशा-त्मा क्रियेत्युच्यते । सा च प्रधानतया पदेऽवतिष्ठते । तद्वाचकश्च धातु प्रादेशिको गुण इत्युच्यते । गुण शेषोऽङ्गमित्यनर्थान्तरम् । तथाच प्रदिश्यते नाम्ना निर्दिश्यते द्रव्यमनयेति प्रदेशः क्रिया नामधेयप्रतिलम्भहेतुभूता तामभिधत्त इति प्रादेशिको धातुरित्येवं मन्यन्ते । अपरे पुनरन्यथैतद्व्याचक्षते तद्दुर्गभाष्यादौ द्रष्टव्यम् ॥

४. वस्तुतस्तु अत्र संविज्ञातानीतिपदे तथावृत्त्यादिन्याय आश्रीयते । एकस्य पूर्वेणापरस्य च परेणाभिसम्बन्ध । तत्र सविज्ञातपदमिति रूढिशब्दस्य संज्ञात्र करिष्यते(दे का ७–२–१०)। तथाच संविज्ञातानि सविज्ञातपदानि तानि यथा गोरश्व पुरुषोऽहस्तीत्येवमादीनि । अतोवा गवादीनामष्टाध्याय्यां व्युत्पत्तिलक्षणमस्ति । तथाचोक्तमुणादयोऽव्युत्पन्नानि प्रातिपदिका-नीति । तस्माद्रूढिशब्दा एवैते भवन्ति इति ॥ पाचकादयस्तु न्यायवरङ्गार्गेनाभिकर्षरूपका-रेणानुगता यौगिकशब्दा इत्येवमन्ये व्याचक्षते ॥

कश्च ( न ) कश्चित् । ( अविशेषेण प्राणिमात्रम् ) तत्कर्म एककारकमनेकः कुर्यात्सर्वं तत्सत्त्वं प्राणिजातं तथा एतन्नामैव ते शाकटायनादय आचक्षीरन् कथयेयुर्जना इति शेषः ॥ तद्यथा—

**यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्यात्**
**यत्किंचित्तृन्द्यात् तृणं तत् ॥ ८ ॥**

यः कश्चिदनश्वोऽप्यध्वानमश्नुवीत व्याप्नुयात् । अशू व्याप्तौ (स्वा. आ.) विधौ लिङ् । अश्व इत्येवं स वचनीयः स्यात् । कस्माद्वाश्वोऽप्यनश्नुवन्नश्व इत्युच्येत तैः । अथ चेदनश्नुवन्नप्यश्वस्तदान्योऽप्यनश्नुवन्नश्व इत्युच्यताम् । तस्मादश्वोऽपि नैवाशनक्रियायोगाभिप्रायेणाश्व इत्युच्यते किं तर्हि[2] शब्दव्यवहार एवायमर्थप्रत्यायनार्थं ईदृशः क्रियानिरपेक्षः । एवमेव यत्किंचित्तृन्द्याच्छिन्द्यात् । उतृदिर् हिंसानादरयोः ( रु. प. ) विधौ लिङ् । अविशेषेण तत्सर्वं तर्दनक्रियायोगात्तृणमित्येवमाचक्षीरन् चाचक्षते जना. । तस्मान्न सर्वाण्याख्यातजानि नामानि ॥

**अथापि चेत्सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः**
**संप्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् ॥ ९ ॥**

क्रियाहेतुके हि नामधेयप्रतिलम्भे सति यावद्भिर्भावैर्यावतीभिः क्रियाभिरेकं द्रव्यं संयुक्तं प्रयुज्येत तावद्भ्यो भावेभ्यः क्रियाभ्यो नामधेयप्रतिलम्भः स्यान्नहि तत्र कासाचिद्व्यावर्त्तको विशेषहेतुरस्ति अन्यासां वा नियामकः ॥ अपिरत्र शङ्कायां सम्भावनायां वा । एवमुत्तरत्रापि । "गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपी"-त्यमरः ॥

**तत्रैवं स्थूणा दरशया वा सञ्जनी च स्यात् ॥ १० ॥ १ सं. सू. ॥**

तत्रैवं सति स्थूणा एकैव यदी दरे[3] ( श्वभ्रे गर्त्ते ) शेत इति दरशया इत्युच्येत न चोच्यते । एवं सज्यतेऽस्यां वंश इति सञ्जनीत्युच्येत । न चोच्यते । एवमनेकानि सत्त्वानि एकक्रियायोगादेकनामानि स्युः । एकं वाऽनेकक्रियायोगादनेकनाम । उभयथापि च व्यवहाराप्रसिद्धिः । तस्मान्न सर्वाण्याख्यातजानि नामानि स्युः ॥१०॥१॥

**अथापि य एषां न्यायवान्कार्मनामिकः संस्कारो**
**यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन् ॥ १ ॥**

एषां पुरुषादिनाम्नां यः न्यायवान् लक्षणन्यायेन युक्तः कार्मनामिकः कर्मकृते नाम्नि (पाचकलावकादौ) भवः संस्कारः । यथा चापि यथैव च । प्रतीतार्थानि प्रतीतक्रियाणि स्युर्भवेयुस्तथा आचक्षीरन् कथयेयुर्जना इति शेषः ॥

कथं पुनर्न्यायवत्संस्कारोपेतानि कथं वा प्रतीतक्रियाणि स्युस्तत्राह—

**पुरुषं पुरिशय इत्याचक्षीरन् ॥ २ ॥**

---

१. "सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादावात्मभावे बले प्राणेषु जन्तुषु" इति हेमचन्द्र. । "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इति त्वमरः ॥

२. उत्तरश्लोकेऽपि । वस्तुतस्तु अथशब्दस्तत्र प्रश्ने अपिशब्दः सम्भावनायाम् "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः ॥

३. "दरोऽस्त्रियां भयेश्वभ्रे" इत्यमरः ॥

एतेः इणगतावित्यस्य धातोः ( अ. प. ) कारितं ण्यन्तं रूपं कृत्वा तदर्थस्या-(न्तर्भावितण्यर्थस्या-) चि'इणो यणि' (पा. ६-४-८१)ति यणि सत्यशब्दस्य यकारादिमन्तकरणमन्त्यार्धं यमितिशब्दं सयस्कारेत्यनुपज्यते । अस्तेरसुधातोः ( अ. प.) शुद्धमनन्तर्भावितण्यर्थं सकारादिं सदिति शब्दं । शतरि 'श्नसो'-( पा. ६-४-१११ )रित्यल्लोपे सयस्कार । तदेतदकृतपूर्वमन्यैर्विद्वद्भिः कृतवान्पाण्डित्याभिमानी शाकटायनो यदभिनत्पदानि' ॥ १ ॥

**अथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद्भावात्पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यते ॥ ८ ॥ ( २ ख. सू. ॥ )**

अथाप्ययमपरो दोषः प्रसज्येत यत्सत्त्वपूर्वो भाव इत्याहुरभियुक्ताख्यद्विदः । सत्त्वं (द्रव्यं) पूर्वमस्मात्सोऽयं सत्त्वपूर्वः । सत्त्वाश्रय एव ह्यसौ भावः (क्रिया) । तत्रैवं सति अपरस्माद्भावादपरकालिकेन भावेन (क्रियया) पूर्वस्य पूर्वोत्पन्नस्य प्रदेशनं प्रदेशः संज्ञाप्रतिलम्भो नोपपद्यते । किंकारणम् ? उत्पत्तिसद्भूता हि सा, स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसंबद्धमेव द्रव्यमुत्पद्यते नित्यसंबद्धौ हि शब्दार्थौ इति तदेतत्सर्वथा सर्वाण्याख्यातजानि नामानीति शाकटायनमतं नोपपद्यते । तदनुपपत्तावसत्पक्षसिद्धिः कानिचिदाख्यातजानि नामानि कानिचिदनाख्यातजानीति ॥ (परिसमाप्तोऽयं गार्ग्यपक्षः) ॥ २ ॥

अथ शाकटायनपक्षेण समाधत्ते—

**यथो हि नु वा एतत् ॥ ६ ॥**

**यथेति** वाक्योपादाने । **यथा** येन प्रकारेण । **उ**कारोऽवधारणार्थः **ही**त्यसूयायाम् **नु**इत्येप **है**त्यपदेशे **वै** इत्ययं यथोक्तपूर्वपक्षोपदेशार्थः । तत्रायमर्थः । येनैव

---

१ अत्रायमप्यर्थः स्वरसतः प्रतीयते । यथासौ शाकटयनः प्रवृत्तो न पदेषु स्थास्यति अपितासौ वर्णानपि भेत्स्यति नानेकार्थांश्च कल्पयिष्यति । योऽपि पदानभिनत्तस्य वर्णभेदने विशेषहेतुः को भविष्यति । तस्मादतिप्रसङ्गदोषापत्त्या नानेकधातुजानि नामानि नापि सर्वाण्याख्यातजानि नामानीति ॥

२. नाख्यातजानि किन्तु रूढान्येव तेषुतेष्वर्थेष्विति ॥ कानिचिदित्युक्त्याऽन्यान्यपि सन्तीति सूच्यते । तथाच आख्यातजानीत्यनेन यौगिकानि अनयोरेव परस्परभेदाद्योगरूढानि यौगिकरूढानि चेति चतुर्विधानि नामानि । यत्रावयवार्थ एव बुध्यते तानि यौगिकानि यथा पाचकादीनि । यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेणार्थो बुध्यते तानि रूढानि यथा गोपदमण्डलादिपदानि । यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति तानि योगरूढानि यथा पङ्कजादिपदानि ॥ तथाहि पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति एवमन्यत्र । यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तानि यौगिकरूढानि यथोद्भिदादिपदानि । तत्रहि ऊर्ध्वभेदनकर्ता तरुगुल्मादिरपि बुध्यते, यागविशेषोऽपीत्येवमन्यत्राप्यूह्यम् ॥

प्रकारेणासूयिता ( असमर्था ) हेतवो गार्ग्यैरुक्तास्तेनैव प्रकारेण एतैत् प्रत्यनुभाष्यप्रवक्तृधर्मेण समीकरिष्याम इति भाव· शाकटायनानाम् ॥ इत्येवं प्रतिज्ञाय गार्ग्यमतमनूद्य खण्डयति—

**तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्।***
**सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति ॥ २ ॥**

यथैतदुक्तं—यत्रेत्यादि तदेतत्प्रत्युच्यते—सर्वमित्यादिनेति पर्युपयुक्तस्तच्छब्दः । सर्वमेव **प्रादेशिकं** क्रियाजं नाम । किंतत· ? इत्येवं सत्यनुपालम्भ एष भवति । अयमाशय· । प्रदेशवाचिन आख्यातानुत्प्रेक्ष्य तदाश्रयौ **स्वरसंस्कारौ** यावद्गम्यमनुविधेयौ । बिभ्वीहि लक्षणगतिर्नैव शब्दापराधो नाप्यस्माक किंतु भवत एव, मन्दशिक्षितत्वात्। यथाचाहु· । न चैव स्थाणोरपराधो यदेनमन्धो न पश्यतीति । येनैत्वं प्रदेशवाचिनि धातौ विद्यमानावपि स्वरसंस्कारौ नानुविधातुं शक्नोषि स त्वं तावत्पुनः पुनः शिक्षस्वान्यथ्वाकरण यावच्छक्तिस्तवानुविधातुमिति ॥

**यथो एतद्यः कश्च तत्कर्म कुर्यात्सर्वं तत्सत्वं तथा चक्षीरन्निति।***
**पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषाम् ।**
**यथा तक्षा परिव्राजको जीवनो भूमिज इति ॥ ३ ॥**

**यथो एतत्** यत्पुनरेतदुक्तं यः कश्चेत्यादि(अनेकेषामेकक्रियायोगादेकनामता प्रसज्येतेति तदर्थं ) तदेतत्प्रत्युच्यते—**पश्याम** इत्यादिना। त्वमपि पश्यसि वयमपि च, पश्याम **समानकर्मणां** तुल्यकर्मणामपि सता(कर्मकर्तृणा)मध्ये **नामधेयप्रतिलम्भ**स्तत्कर्मकृतसंज्ञाप्राप्तिरे**केषामे**व केषाचिदेव नियमतस्तत्कर्म कुर्वन्ति ईति। **नैकेषां** न सर्वेषा तत्कर्मकर्तृणां, तद्यथा तक्षन्कश्चित् (वर्धकि )तक्षेत्युच्यते अन्य·

१. गर्गगोत्रापत्यछात्रैस्तन्मतानुयायिभिरित्यर्थ. । अत्र गर्गाणा छात्रा इत्यर्थे "यञि· ओश्च" ( पा० २–४–६४ )ति प्राप्त यञोलुक "गोत्रेऽलुगची–" ( पा० ४–१–८९ )ति "वृद्धाच्छ" (पा० ४–२–११४) इति छे विवक्षिते बाधते । "आपत्यस्य चे–"(पा० ६ –४–१५१ ) ति यलोप. ।

२. अयंच पूर्वपक्षसमीकिरणाभिनय· । पूर्वपक्षस्वरूपानुवादो वा तथार्थकस्यैवोत्तरत्राप्यभिसम्बन्धात् । तथात्वेच प्रत्युच्यत इति क्रियाध्याहार्या योत्तरत्राप्युपयोक्ष्यते ॥

३. प्रवक्तृत्वेन प्रकृष्टवक्तृत्वेन प्रवचनकर्तृत्वेन वा ॥

४. महाभाष्ये पतञ्जलिचरणैरुपन्यस्तोऽयल्लोकानामाभाणकः । अत्रापि स्फुटीभविष्यत्युपरिष्टान्मूले । ( निरु. १–५–२ ) ॥

५. मन्दशिक्षितत्वेन ॥

६. "निपातएकाजि"–( पा० १–१–१४ )ति प्रगृह्यत्वात्प्रकृतिभावेन (पा० ६–१–१२५ ) असन्धिः ॥

७. त्वञ्च वय चेति वय "त्यदादीनां मिथः सहोक्तौ यत्पर तच्छिष्यत" इत्यस्मद· शेष ॥

८. निपातेनामुना कर्मण उक्तत्वान्न द्वितीया नामधेयप्रतिलम्भात् ॥

९. एकशब्दोऽत्र साधारणवचन· पूर्वत्र तु प्रधानवचन. । यथाहुः 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यत" इति ॥

* गार्ग्यमतानुवादसूचकमेतत् ॥ एवमुत्तरत्रापि बोध्य सूत्रेष्वनुपदम् ॥

स्तक्षमपि न तक्षेत्युच्यते । नात्राहमुपलब्धव्यो लोकनियम एवायम् । एव परिव्रजतीति **परिव्राजकः** सन्यासी एव, नपुन सर्वोऽपि कार्यवशात्प्रयान्गृहादिभ्य । एव जीवन इक्षुरस शाकजातिर्वा । भूमिजोऽङ्गारक (कुज) एवेत्येवमन्यत्राप्यूह्यम् । उदाहरणस्य दिङ्मात्रप्रदर्शकत्वात्तदेतदाह–**इतीति** । इतिशब्द आद्यर्थे ॥

**एतेनैवोत्तरः प्रत्युक्तः ॥ ४ ॥**

**उत्तरः** यावद्भिर्भावै सम्प्रयुज्यते तावद्भ्यो नामधेयप्रतिलम्भ स्यादित्येष । स **प्रत्युक्तः** खण्डित । अय भाव । पश्यामोऽनेकक्रियायुक्तानामपि एकक्रियाकारितो नामधेयप्रतिलम्भो भवति । तद्यथा तक्षादि । तक्षादिर्ह्यन्यान्यपि कर्माणि करोत्येव न पुनस्तस्य तत्कृतो नामधेयप्रतिलम्भोऽस्ति । तस्मादेकस्यानेकक्रियायोगेऽपि, अनेकस्यैकक्रियायोगेऽपि वा व्यवस्थितएव शब्दनियम स्वभावत इव लोके इति न व्यवहाराप्रसिद्धिदोष शङ्कनीय इति ॥

**यथो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति ।** [5]
**सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिका यथा व्रततिर्दमूना जाट्य**
**आट्णारो जागरूको दर्विहोमीति ॥ ५ ॥**

**यथो** एतद्यत्पुनरेतदुक्त **यथा–चापी**त्यादि । अत्र ब्रूमं । **सन्त्येवाल्पप्रयोगा**. प्रतीतार्थका केचित् कृत कृत्प्रत्ययान्ता शब्दा **अप्यैकपदिका** एकपदप्रकरणोक्ता । तद्यथा । **व्रतति**र्वृणोतेस्तनोतेश्च (स्वा० त० उ०) क्तिच् । "अनुदात्तोपदेशे"–( पा० ६–४–३७ ) त्यनुनासिकलोप । वृणोतेरगागमश्च बाहुलकात् । तथाच व्रततिर्वरणाच्च तननाच्चेति ( नैग० का० ६–५–६ ) वल्ली । "वल्ली तु व्रततिर्लते"त्यमर । **दमूना** दममना वा दानमना वा दान्तमना वापिवा दम इति गृहनाम ( निघ० ३–४ ) तन्मना स्यादिति ( नैग० का० ४–१–४ ) । दास्य-

१. परित्यज्य सर्वं रुदन्त पुत्रादिक व्रजति गच्छत्यवेति ण्वुल् ( ३–१–१३३ ) ॥

२ प्रयाण ( प्रस्थान ) कुर्वन् ॥

३. जले तु क्लीबम् । "जीवन भुवन जलमि" त्यमर ॥

४. "ज्वलितिकसन्तेभ्य" ( पा० ३–१–१४० ) इत्यत्र यथा ॥

५ प्रथमतस्तुशब्दस्वाभाव्यमेतद्यत्तथा सर्वाण्याख्यायन्ते यथा यथाप्रतीतार्थानि भवन्ति । न तत्राहमपराध्ये भवतो नापि च शास्त्रम् । यथावस्थितानां शब्दानामन्वाख्यानमेव क्रियते । नाहंशब्दानां कर्ता । य एषा प्रयोक्तास्तानेतोपालभस्व निराकुरुष्व, यदि शक्नोषि । अथ कस्मात्पुन कानिचिदेवाख्यायन्ते लोके ? तदप्यभिधानस्वाभाव्यमेव । कानिचित्प्रतीतार्थानि कानिचिदप्रतीतार्थानि । तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्तव्यानि । एतदेव हि शास्त्रस्य शास्त्रत्वं यदप्रतीतार्थान्यपि यथा प्रकृत्यादिना प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति । आख्यायन्तएव कानिचित् । कानिचित् शास्त्रेण प्रतीतार्थानि क्रियन्ते । लक्ष्यानुविधायित्वाल्लक्षणस्य गुणतस्तेषु लक्षणम्–अपिच–( इति दुर्ग ) ॥

